उद्देश्यविधेयभावस्थले तु उद्देश्यगता संख्याऽऽख्यातप्रत्यये आस्तामिति चेत्प्रामाणं स्युः, इत्यादिषु । पुनरपि वाक्यं द्विधा । काव्यात्मकमकाव्यात्मकं च । द्वितीयं तूक्तम् । आद्यं तु तददोषौ शब्दार्थौ सगुणावनलंकृती पुनः क्वापि इत्यनेन लक्षितम् । अत्र यावद्दोषाभावो विशेषणं कथम् । असंभवात् । यत्किंचिद्दोषाभावे अदोषपदवैयर्थ्यम् । तस्मान्नञोऽल्पत्वमर्थः । अनुदरा कन्येतिवत् । अल्पत्वं च स्फुटप्रतीयमानदोषराहित्यम् । इदं काव्यलक्षणं रसगङ्गाधरे दूषितम् । शब्दार्थयोर्द्वयोर्व्यासज्यवृत्तिकाव्यत्वे काव्यं श्रुतं, अर्थो न ज्ञात इति व्यवहारासंभवात् । तदसमञ्जसम् । एकदेशे दग्धेऽपि पटो दग्ध इतिवदेकदेशेऽपि प्रयोगसंभवात् । समुदायवृत्तयः शब्दाः क्वचिदेकदेशेऽपि वर्तन्ते इति भाष्यात् । तल्लक्षणमपि तु न समञ्जसम् । तथा हि रमणीयार्थप्रतिपादकः शब्दः काव्यम् । रमणीयत्वं च लोकोत्तराह्लादजनकज्ञानविषयत्वमिति तल्लक्षणात् । इदं च तत्त्वमसीत्यादावतिव्याप्तम् । न चाऽऽह्लादे वैजात्यम् । किं ततः । लोकोत्तराह्लादजनकज्ञानविषयत्वस्योभयत्र तुल्यत्वात् । ब्रह्मानन्दत्वेन सर्वापेक्षितत्वाच्च । किं च रमणीयपदस्य रमणीयार्थप्रतिपादकत्वमस्ति न वा । नाऽऽद्यः—रमणीयशब्दस्यापि रमणीयार्थप्रतिपादकत्वेन काव्यत्वापत्तेः । इदं च भाष्येऽशब्दार्थकः शब्दोऽशब्द इति वत् अपशब्दस्यापि अपशब्दत्वापत्तेरित्यनेन ध्वनितम् । नान्त्यः—रमणीयार्थप्रतिपादकत्वाभावे लक्षणत्वानुपपत्तेः । तस्मात्प्रकाशोक्तमेव लक्षणं सम्यक् । एवं वह्निना सिञ्चतीत्यादौ वाक्यस्फोट एव । ननु वाक्यार्थबोधे अयोग्यतानिश्चयस्य प्रतिबन्धकत्वं योग्यताज्ञानस्य कारणत्वं तार्किकादिसिद्धान्तसिद्धं प्रकृते च वह्निः सेककरणं नेति विषयबाधरूपायोग्यतानिश्चयरूपप्रतिबन्धकसत्त्वाद्विषयाबाधरूपयोग्यताज्ञानासत्त्वात्कथमेतस्य वाक्यस्फोटत्वमिति चेत्सत्यम् । तात्पर्यविषयाबाधो हि योग्यता । तदभावोऽयोग्यता । प्रकृते चात्युष्णजलेन सिञ्चतीति तात्पर्यविषयः । यथा—अस्य क्षोणिपतेः परार्धपरया लक्षीकृताः संख्यया प्रज्ञाचक्षुरवेक्षमाणबधिरस्याः किलाकीर्तयः । गीयन्ते स्वरमष्टकं कलयता जातेन वन्ध्योदरान्मूकानां प्रकरेण कूर्मरमणीदुग्धोदधे रोधसि । गगनं गगनाकारं सागरः सागरोपमः । रामरावणयोर्युद्धं रामरावणयोरिव । कल्पान्तस्य प्रथमशिखरे वेणुसंमूर्च्छनाभिः अन्या कीर्तिं विधुरमणीगीयमानां यदीयाम् । स्मेरापाङ्गाः सस्मितविसिनीताण्डवं जानता दिक्कान्ताङ्गाः श्रवणपुलिने हस्तमावर्तयन्ति । यस्य नीलोत्पलद्वन्द्वान्निःसरन्ति शिताः

शराः । इति । आद्यालंकारिकवाक्येषु गङ्गायां घोष इत्यादौ तत्त्वमसीत्यादौ च तात्पर्यविषयाबाधो योग्यत्वमिति सर्वसिद्धान्तः। तथाऽबाधि। यद्वा शाब्दबोधेऽयोग्यतानिश्चयस्य न प्रतिबन्धकत्वं तत्सत्त्वेऽपि त्वं बृहस्पतिरिति स्तावकवाक्यात्संतोषोपलब्धेः। नाहं रण्डापुत्र इति बाधनिश्चये सत्यपि त्वं रण्डापुत्र इति वाक्यात्कोपोपलब्धेश्च । शाब्दबोधाभावे एतदनुपपत्तेः किं च पश्य नीलोत्पलं द्वारादित्यादिमाध्यवसानादिलक्षणास्थले शरा नीलोत्पलर्द्वारापादानकाः नेत्ययोग्यतानिश्चये सति तद्वाक्यश्रवणानन्तरं वाक्यावबोधोत्तरमयोग्यतानिश्चयः पूर्वं वा । नाऽऽद्यः—बाधनिश्चये सति बाधाभावात् । नान्त्यः—बाधाभावेऽन्वयानुपपत्तेरभावात् । नहि स्वरूपसती अन्वयानुपपत्तिर्लक्षणाबीजम् । किंतु ज्ञाता । न च पूर्वमयोग्यतानिश्चयसत्त्वेन तज्ज्ञानमप्यस्त्येवेति वाच्यम् । बाधावाक्यार्थबोधजन्यान्वयानुपपत्तिज्ञानस्य पूर्वमभावात् । गङ्गा घोषाधिकरणं नेति लौकिकज्ञानसत्त्वे गङ्गायां घोष इति वाक्याद्गङ्गाधिकरणको घोष इति बोधोत्तरमन्वयानुपपत्तिर्हि अनुभवसिद्धा । न च तस्याः पूर्वं ज्ञानं संभवति । न च भ्रमात्मको बोध तार्किकोक्तं युक्तिमत् । अयोग्यतानिश्चयस्य प्रतिबन्धकत्वं योग्यताज्ञानस्य कारणत्वं प्रकल्पनीयम् । भ्रमात्मको बोधश्च कल्पनीय इति महद्गौरवम् । स्फोटवादिनां त्रितयमपि न कल्पनीयमिति लाघवम् । वाक्यार्थबोधजन्यप्रवृत्तावेव तत्स्वीकारात् । किंच नाहं परमेश्वर इति बाधनिश्चये सति तत्त्वमसीतिवाक्याद्बोधाभावे भ्रमात्मकबोधे वा न प्रमात्मकं ज्ञानं संभवति भ्रमात्मकबोधस्य प्रमात्मकबोधजननायोग्यत्वात् । एवं दशमस्त्वमसीत्यत्रापि । ननु अनेकवर्णातिरिक्तोऽनेकध्वनिव्यङ्ग्योऽखण्डवाक्यस्फोटः कः पदार्थ इति चेच्छृणु—यथा तार्किकैः पूर्वोक्तमर्यादया गत्यन्तरसंभवेऽपि चित्ररूपमतिरिक्तं स्वीक्रियते यथा शाब्दिकैः रेफद्वयाज्भागविशिष्ट एको वर्णः क्लृति क्ल वा, लृति लृ वा इत्यत्र वार्तिके स्वीक्रियते यथा वा सिद्धमेतत्तस्थानत्वादिति बोधोत्तरभूयस्त्वादिति वार्तिकेऽनेकाचां एकवर्णात्मकत्वमुक्तं तथा ममाऽपि अनेकध्वनिव्यङ्ग्यः वाक्यात्मक एको वर्ण इति स्वीक्रियते । स च शब्दब्रह्मरूपः तत्र मतत्रयं शब्दब्रह्मेति शब्दार्थः शब्दमित्यपरे जगुः । चैतन्ये सर्वभूतानां शब्दब्रह्मेति मे मतिः । इति । शब्दब्रह्मेति निर्वचनेनापि तस्य वर्णत्वं सिद्धम् । अनुमानादपि । तथाहि—अखण्डवाक्यस्फोटः, एकवर्णरूपः, आवरणत्वात् । ध्वनिव्यङ्ग्यत्वाद्वा । यन्नैवं तन्नैवं यथा—भूम्यादि । अन्वयदृष्टान्तस्तु मतान्तरसिद्धवर्णादि ।

वस्तुतस्तु अन्वयव्यतिरेकयनुमानं व्यर्थम् । उपनीतमानेनैव गतार्थत्वात् तथाहि – यथा चन्दनखण्डस्य लौकिकप्रत्यक्षं सौरभ्यस्यालौकिकं तथा धूमस्य लौकिकं वन्हेरलौकिकमिति अस्मिन् पक्षे उपनीतमानेनेति विवेकः । यद्वा लाघवाद्दोषाभावाद्ध्वनिव्यङ्ग्यान्यस्याभावाच्च वर्णत्वस्वीकारः । न च ध्वनिव्यङ्ग्यत्वस्य गुणीभूतव्यङ्ग्यप्रभेदे काक्वाक्षिप्तस्यापि अन्यस्य संभव इति वाच्यम् । तस्य ध्वनिविकारकाकुव्यङ्ग्यत्वेऽपि ध्वनिव्यङ्ग्यत्वाभावात् । किं च कामः संकल्पो विचिकित्सा श्रद्धाऽश्रद्धा धीः ह्रीः, एतत्सर्वं मन एवेति श्रुत्या कामादीनां मनोधर्मत्वे प्रतिपादितेऽपि तार्किकैरात्मधर्मत्वमुक्तं तच्च सर्वैरङ्गीकृतं तत्तु भ्रमात्मकं, तद्बीजं तु यथा जपाकुसुमसंनिधाने स्फटिको लोहित इति ज्ञानम् । प्रकृते तु न मनःसांनिध्यम् । आत्मधर्मे बीजं श्रुतिबाधश्च । स्फोटे तु न तथा । तस्मादेकवर्णात्मकोऽखण्डवाक्यस्फोटो वाचक इति सिद्धम् ।

इति श्रीमौनिकुलतिलकायमानगोवर्धनभट्टात्मजजानकीजानिरघुनाथभट्टात्मजश्रीकृष्णकृतस्फोटचन्द्रिका समाप्ता ।

---